# समर्पणम्

## अष्टमं प्रसूनम्

सम्पादकः
डॉ. सौ. आशा गुर्जर (फडके)

गायत्री साहित्य, पुण्यपत्तनम्
२०१३

॥ श्रीः ॥

समर्पणम् (संस्कृत-लेख-कथा-काव्य-कथाकाव्यानुवाद-सङ्ग्रहः)
प्रा. ग. बा. पळसुले-स्मृतिग्रन्थमालायाः अष्टमं प्रसूनम्।

सम्पादकमण्डलम्

आशा गुर्जर कांचन मांडे
भारती बालटे ज्योत्स्ना खरे
भाग्यलता पाटसकर शैलजा कात्रे



प्रकाशनदिनम् - २८/११/२०१३

अक्षरविन्यासः
नघा गोवंडे, बन्सी लव्हाळे, सई बांदिवडेकर

मुखपृष्ठम् -
सचिन पांडे

छायाचित्राणि-
आशा गुर्जर

मुद्रकः- स्टेप इन् सर्व्हिसेस, कसबा पेठ, पुण्यपत्तनम्

प्रकाशकः- प्राप्तिस्थलम् -
श्री. रवीन्द्र गुर्जर, सौ. आशा गुर्जर, गायत्री साहित्यम्,
२६/१२, प्रतीकनगरम् पुण्यपत्तनम्, ४११००६, महाराष्ट्र
दूरभाषः- ०२०-२६६९५१६८, भ्रमणध्वनिः- ९०९६०८१३०८

मूल्यम्- द्विशतरूप्यकाणि (२०० /-)

## अनुक्रमः

# उत्तररामचरिते छायाङ्कः ।

**नीलेश जोशी**

सन्ति यद्यपि संस्कृतसाहित्ये नाटकनिर्मातारो बहवः प्रमातारः परं तत्राऽपि लोकाऽतिशायियशोराशिसमुद्भासितौ कविवरौ द्वावेव विश्वविख्यातमहानुभूतिर्भवभूतिः महाकविः कविकुलगुरुः कालिदासश्च । महाकवेर्भवभूतेः कृतित्वेन त्रीणि रूपकाणि समासादितानि तानि यथा - महावीरचरितमुत्तररामचरिते चेति मर्यादापुरुषोत्तमप्रभुरामचन्द्रचरितप्रतिपादकं नाटकद्वयम्, तृतीयं रूपकं तु मालतीमाधवाऽभिधानविशिष्टमनन्यसाधारणं प्रकरणम् ।

कथावस्तुवैशिष्ट्यम् - अस्मिन्निबन्धे उत्तररामचरितस्य कथावस्तुवैशिष्ट्यं प्रतिपादनीयम्। उत्तररामचरिताभिधानं नाटकमिदं वाल्मीकिरामायणस्योत्तर-काण्डस्य कथाभागादुपसंगृहीतम्। वाल्मीकिरामायणस्योत्तरकाण्डस्थकथानकाद् वा महावीरचरितनामकप्रथमकृतेः परिशिष्टांशरूपेण वा स्थितत्वाद् अस्य नाटकस्योत्तररामचरितमिति समीचीनं नामधेयं खलु। वा मर्यादापुरुषोत्तमस्य प्रभुरामचन्द्रस्य वर्णाश्रमधर्मसंरक्षणादिषु गुणाः गुणातिरेकेणोत्तरे प्रचकासते तस्मात्परमुत्तरमुत्कृष्टं रामचरितं यस्मिन् तदुत्तररामचरितमिति। मातापित्रादिषु गुरुजनेषु च रामे भक्तिः, पत्नीभ्रातृप्रजाजनानुरक्तिश्चेत्यादयो गुणाः सन्ति परम् उत्तररामचरिते प्रजाजनानुरञ्जनार्थमादर्शस्थापनार्थं सीतानिर्वासनं तद्यथा महाकविना आलोचितम् -

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥** (उ.रा.च..)

अत्र बहवो अंशाः कविकल्पनाप्रसाधिताः यथा आलेख्यदर्शनम् । आत्रेय्या वनदेवतया वासन्त्या साकं तमसया च मुरलया समं संलापः । सीतीयास्तमसया सरिता सह छायारूपेणोपस्थितिः । प्राचेतसाश्रमपदे कौसल्याजनकादीनां सम्मेलनम् । भरतमुनिकर्तृको रामायणनाटकाभिनयः, सप्तमेऽङ्के सीतारामयोः समागमश्चेत्यादयः बहवो भागाः ।

**छायाङ्कः** - करुणरसपरिपाकोऽयं तृतीयोऽङ्कः, यो छायाङ्कनाम्ना सम्बोधितः। सीतापरित्यागादनन्तरं घटितकालचक्रबाधितवृत्तान्तनिवेदनं समुपस्थाप्यते अस्मिन् । अत्र तमसा सीतया सह, सीता अदृश्यरूपेण रामचन्द्रेण समं, श्रीरामश्चापि वासन्त्या साकं छायान्वितः खलु । प्रारम्भ एव कथितं अतीतेषु द्वादशवर्षेषु त्वयि

सीतावियोगजन्यो मनोविकारोऽतिशयो रामं भृशं तापयतीति तद्यथा

**अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।**

**पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥** (उ.रा.च.)

श्रीरामचन्द्रस्य मनोमस्तिष्के जानक्याः प्रतिमाछायेव विद्यमाना । पञ्चवटीवने सीतासहनिवासलीलासाक्षिषु प्रदेशेषु त्वतिशयदुर्ज्ञेयमन्युक्षोभसंवेगान्मूर्च्छितस्य रामभद्रस्य सञ्जीवनोपायो मूलत एव सन्निहितः । तस्मादेव भूम्यां निपतितः सीतया स्पृश्यमानः श्रीरामोऽवदत् -

**आश्च्योतनं नु हरिचन्दनपल्लवानां**

**निष्पीडितेन्दुकरकन्दलजो नु सेकः ।**

**आतप्तजीवितमनः परितर्पणोऽयं**

**सञ्जीवनौषधिरसो हृदि नु प्रसक्तः ॥** (उ.रा.च.)

**रामस्य मनस्थितिः** - रामस्य मनःस्थितिरवश्यं ज्ञेया। अस्य वासन्त्या सह यज्ञसम्पादनचर्चा प्रचलिता, यो मखविशेषः सीतायाः प्रतिकृत्यैव निर्वाहितः। तदा रामोऽपि बाष्पलिप्तं चक्षुर्विनोदयतीति, अत्र सीताप्रतिकृतेरश्वमेधसहधर्मचारिणीत्वमानुषङ्गिकं मुख्यं तु चक्षुर्विनोदिति सूचितम्। लक्षणीयं वचनं सीताया, अहो! उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्यपुत्रेणिति। तेन पुनः सीताविषयकलोकापवादस्यावास्तविकत्वस्थापनार्थमेव परिणयसौलभ्येऽपि जानक्या एव हिरण्यमयी प्रतिकृतिर्यज्ञे सहधर्मचारिणीस्थाने स्थापयित्वाऽन्येव्यवहारेण तस्याः परित्यागःदुःखं निर्गतप्रायमिति भावः। अत एव रामचन्द्रस्य मानसिकतामभिज्ञाय तं प्रति ननु अनन्यानुरागः प्रकटितः। अङ्केऽस्मिञ्छायारूपसीतायाः श्रीरामेण सह वार्तालापो सीतया तस्य स्पर्शेण समाश्वासनमिति स्वभावसुन्दरी नाटकीया योजना। भवभूतिना छायानृत्यानामनुकरणेनेयं संयोजिता। मनसोः दुरवस्थां प्रसंगे प्रतिपादयन्ति सीतारामयोरुभयोः। रामचन्द्रोऽपि पञ्चवटीवने छायारूपसीतया समं दृष्टपूर्वाणि मनोहरस्थानानि गोदावरीपरिसरस्य गिरेस्तटानि बहुकन्दरनिर्झराणि पश्यति । तस्मादनेन पञ्चवटीदर्शनेन स्वभावेन धैर्ययुक्तस्यापि रामचन्द्रस्य कार्यान्तरव्यापृतत्वान्नि-गूढा अन्तःकरणे विरहव्यथा तमाच्छादयति तद्यथा

**अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः ।**

**उत्पीड एव धूमस्य मोहः प्रागावृणोति माम् ॥** (उ.रा.च.)

इत्यत्र यथाग्नेर्ज्वलनात्पूर्वं धूमः सर्वत्राच्छादयति तथैव दुःखोत्पन्नामूर्च्छा दुःखसंप्रसरणात्पूर्वं रामचन्द्रं संच्छादयतीति भावः। तथापि श्रीरामस्य सन्तप्तस्थितेः शब्दचित्रं भवभूतिना आलेखितं तद्यथा -

दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ (उ.रा.च.)

पुनरपि च,

हा हा देवि ! स्फुरति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ् मोहः स्थगयति कथं मन्दभागः करोमि ॥ (उ.रा.च.)

यावद्रामोऽवदत्हे जानकि ! क्वासि त्वम् ? इति तावदेव छायारूपा सीता प्रत्युवाच हा हा धिक् ! हा धिक् !! अन्य इवार्यपुत्रः प्रमुक्तकण्ठं रोदितीति । तमसा सीतां वासन्ती च समं प्रति मङ्गलमस्मिन्नेवाङ्के सूचयतः तद्यथा

अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धती को वसिष्ठ–
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ (उ.रा.च.)

**सारांशः** अन्ततः कथ्यते यत्दृश्यवैचित्र्यं, मनोभावानां मनोवैज्ञानिकविश्लेषणं, करुणरसप्रवाहसातत्यं दाम्पत्यजीवनस्य छाया चेत्यादिभास्वरचरित्रचित्रणा-त्मकत्वात्अस्याङ्कस्य छाया मतिमुकुरे हृदयङ्गमरूपेण प्रतिफलतीति ।

* * *